श्रीविद्वन्मनोरञ्जनीमालायाः

चतुर्दशः स्तबकः

ओं

" धर्मे सर्वं प्रतिष्ठितम् "

# धर्म व्यतिक्रम विलापः

कश्चन उपन्यासः

श्रीदशाऽवतार दण्डक समलङ्कृतः

श्रीकाञ्च्यां

श्रीमन्मद्रपुरीवर्णाश्रमधर्मसंरक्षणसभायाः

प्रथमवार्षिकमहोत्सवसम्मेळनावसरे

देववाण्या

श्रीमद्रपुरीमहान्यायस्थलन्यायवादिना

त. शं. नारायणशास्त्रिणा

संकलितः

विजयते तराम्

1916

मूल्यं आणकद्वयम्

श्रीमद्रपुर्यां श्रीशिवरहस्ययन्त्रालये

मुद्रयित्वा प्रकाशितः



श्रीकाञ्च्यां

श्रीमन्मद्रपुरी वर्णाश्रमधर्मसंरक्षण सभायाः

प्रथमवार्षिकमहोत्सवसम्मेळनाऽवसरे

श्रीमद्रपुरीमहाधिकरणन्यायवादिना

त. शं. नारायणशास्त्रिणा

सङ्कलितः

दशावतारदण्डकसमलङ्कृतः

# धर्म व्यतिक्रम विलापः

---

अहह! कथमिव समायातोऽयं दुर्भाग्यमयः समयः सनातनधर्मस्य! यद्, यत्र गरुडाङ्किता महाध्वजाः समुद्धूनने गगनतलोद्धूयमानपवन मपावयन्, तत्र विस्रगन्धिनो विविधसाध्वारिकरोगनिदानभूता वीथिप्रणाल्युद्गमानधूमध्वजा भारताभिजनसघनकलङ्का इव समुद्धूयन्ते; यत्र कोटिजन्मार्जितमहापातकवी-

घंटावदावानलज्वालामालाभिरिव हरिहरनामघोषणाभि र्व्यापूर्यत वसुधा, तत्र कर्णकषाया श्चीत्कारमयाः शिवविष्णुनिन्दानादाः कर्णौ स्फोटयन्ति; यत्र कदा जन्माष्टमी? कदा रामनवमी? कदैकादशी? कदा प्रदोषः? इति पृच्छा समश्रूयत पण्डितमण्डलेषु, तत्र हि कदा मोहरमः? कदा रामयानम्? कदा कृष्टिमासः? कदा ईस्तरः? इत्यादि रनवरत माकर्ण्यते विरामकुतुकानां विनोदैकलालसानां विमुक्तपरमपुरुषार्थाना मस्मद्देशीयानां प्रश्नविन्यासः; यत्र विपणिषु सर्वदा द्राक्षा रम्भा, आम्राणि नारिकेळानि दाडिम्बानि, बीजपूराणि जम्बीराणि लिकुचानि पनसानि च व्यक्रीयन्त, तत्राऽधुना वर्तिका स्तित्तिराः, कुक्कुटा लावाः कलविङ्काः, सारसाः श्येना उलूका स्तत्तदण्डाश्च विक्रीयन्ते; यत्र पुन र्विशालतिलकाः कलितरुद्राक्षतुलसीकमलाक्षमालिका ऊर्णाकौशेयमात्रपवित्रवसनाः काष्ठपादुकारोहिणो भगवन्नामामृतरसरसनरसिकरसना विहिततीर्थसार्थसञ्चरणचरणाः स्वोचिताचाराचरणमात्रव्यसनिनो महात्मानः सप्रश्रयं सस्तवं सपादस्पर्शञ्च प्राणम्यन्त, तत्र त एवाऽधुना वीथिषु राजपथेषु, तडागतटेषु उद्यानेषु, विपणिषु समाजेषु च, महामांसढक्कारपूतिगन्धसम्बन्धान्धीकृतपारिपार्श्वकैः, चिरजलानवगाहनोद्भूतमहामलावलिमलीमसैः, मद्य-स्वेद-निष्ठ्यूत-कर्णकिट्ट-सिङ्घाण-दूषिकादि-विविधमललिप्त-चिराक्षाळितमलिनवसनैः, आजानुपरिधृतदीर्घचर्मोपानद्भिः, वारवधूच्छिष्टभोगिभिः, दुराचारहतकैः ब्रह्मबन्धुभिरेव, सगर्वं साहङ्कारं सोन्मादं च, अवहेल्यन्ते, अवधीर्यन्ते, गालिप्रदानपुरःसरं तिरस्क्रियन्ते, [illegible] ताड्यन्ते, निःसार्यन्ते च! समायातोऽयं

घोरः कलियुगो, नाऽत्र संशयः। हन्त! यै दुराचारहतकै दृशाऽप्यव-लोकित मन्नादि, अस्मत्पूर्वजै र्महानुभावैः, शुनकेभ्यो वितीर्णम्, तै-रेव व्रात्यापसदैः साकं मधुना, एकपङ्क्तौ, एकासने, एकभाजन एव, गौरवबुद्ध्या तादृशमहाकुलप्रसूतैरेव भुज्यते! ये चाऽस्मत्सनातन धर्माचारनिन्दकाः सजिह्वाच्छेद मस्माकं पूर्वपुरुषै रार्यसमया न्निरवासिषत, त एवाऽधुना राजास्थानेषु, नागरिकसमाजेषु, पण्डितपरिषत्सु च साऽञ्जलिजयध्वनिसन्तोषकरघोषपुरःसरं अ-भिवाद्यन्ते, अभिनन्द्यन्ते, सश्लाघ मनुमोद्यन्ते च!

अहो! सम्प्रत्यपि बहवः साधवः, पाश्चात्यदुर्मतदुराचार-दुर्मर्यादाभूतप्रेतपिशाचिकाग्रस्तैः शिरोमुण्डन - कञ्चुकधारण - दीर्घोपानद्ग्रहणादिभिरेव स्वान् नवनागरिकशेखरान् मन्यमानैः आर्यपदानर्हैः हिन्द्वपसदश्वापदैः सहठात्कारं सर्वथा परिभूयमाना अपि, व्याघ्रवदनाघ्राणसाहससोदर्यसाहसोपबृंहिताः कृपाणधारा-स्विव धावमानाः प्राणान प्यगणयन्तः, "शिव राम गोविन्द! हरे कृष्ण दामोदर महादेव!! नारायण वामन वैकुण्ठ रमापते गौरीपते!!!" इत्यादीनि सकलकलिकल्मषापनोदनपटूनि, अधरी-कृतसुधामाधुर्याणि, सवीणावादं नारदेन रसनीयानि भगवन्ना-मानि उच्चारयन्तः कलितपरमपवित्रवेषाः विमुक्तरागद्वेषाः, तत्त-त्कुलाचारसम्प्राप्ततिलकपुण्ड्रचूडादिधारणपवित्रीकृतसकलगात्राः, सहमाना अपि वाचाटाना मेतेषां दुराचारहतकाना मरुन्तुदा वाचः, कथं कथमपि स्वधर्मं निर्वहन्ति! हा! धिगस्मान्, ये दुराचाराणा मेतेषां ईदृश मात्मधिकारं ईक्षामहे! सहामहे!!

जीवाम श्च !!! (निश्वस्य) आः ! ग्रहा एव प्रतिकूलाः! विधिरेव वामः! समय एव अशुभमयः! अदृष्टमेव निकृष्टम्! भवितव्यमेव निन्दितव्यं सनातनधर्मस्य! अन्यथा को वा दार्शनिकंमन्यः सकलभारतीयसनातनधर्ममूलभूतानां अद्वैत - विशिष्टाद्वैत - द्वैतरूपाणां त्रिविधब्रह्ममीमांसादर्शनाना मेकतमस्याऽपि सिद्धान्तलेशस्य लेश मपि निराकर्तु मलम्? परन्तु, ऐक्यमेव न भवत्यस्माकं त्रिमतस्थानां सनातनधर्मसर्वस्वानुयायिनामपि! यदि नाम सर्वेऽपि भारताभिजनवैदिकवराः सह युञ्जीरन्, त द्वयं क्षणेन पारावारमपि मरूकुर्मः। स्वजातीयबन्धुभिरेव कृतवैराणां परजातीयमहाशयैः सोपहासं बहिष्कृताना मुभयभ्रष्टानां भारताभिजनसमयाचारपरिष्कारकंमन्यानां दुराचारहतकाना मेतेषां प्रशमन न्तु को नाम कठिनो व्यापारः? परं तु, "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति श्रीमद्भारतमातृसेवाबद्धपरिकराणां स्वदेशाभिमानिनां अन्यतमः, प्राचीननवीनशास्त्रवादिना मग्रेसरः, महावैदिककुलसम्पन्नो महामहनीयः शास्त्रिमहाराज एव वर्णाश्रमाचारनिर्मूलनपराणां कदर्यहतकाना मेतेषां परिष्कारकंमन्यानामेव पार्श्वग्रहता मङ्गीकृत्य, भारताभ्युदयकांक्षिभिः सनातनधर्माभिमानिभि रस्माभिरेव सह योद्धुं ध्वजा नुद्धूय, मद्रनगरनेदीयस्येव राजकीयमहासभायां शिबिरा ण्यधितिष्ठति। सकलधर्माचारप्रवर्तनानां आदर्शभूते, श्रीमच्छङ्कररामानुज-मध्वप्रभृतिभि र्मताचार्यैः पवित्रीकृते, इदानीमपि सकलवैदिकधर्माणा मङ्कुरस्थले श्रीदक्षिणभारत एव विद्यमानाः केचन वैदिकशास्त्रविशारदाः संस्कृतकलाशालासु देवभाषोपदेष्टारः स्वदेशपण्डिता एव स्वकपोलकल्पनाकल्पितैः विपरीतार्थविन्यासैः कुल-

कावलम्बनैश्च, अधर्मं धर्ममिति, दुराचारं सदाचारमितिच प्रदर्शयन्तः स्वपाण्डित्यगरिम्णा अप्रसिद्धपदार्थकेन, दुरन्वयव्यवहितान्वययो रन्वयप्रदर्शनेन, अपरिपूर्णस्थले अध्याहारकल्पनेन च शास्त्रजातं प्रकाम मधरोत्तरीकुर्वन्तः, कदर्यहतकाना मेतेषामेव साहाय्य माचरन्ति । वङ्गदेशे श्रोत्रियप्रवराः पूर्णतया पाश्चात्यमताचारानुयायिनः संवृत्ता इति श्रूयते । मोहाम्बामण्डले प्रायः सर्वेऽपि भारताभिजनवराः महामोहप्रेरिता अर्थकामावेव प्रधानपुरुषार्थतया समवलम्ब्य नूतनधर्मपरिवर्तनपरायाणाः सनातनधर्म मशेषमपि कथाऽवशेषं कर्तुं हठात् प्रवर्तन्ते । उत्तरभारते तु वैदिकधर्मानुयायिनः प्रायशो न वर्तन्ते; सन्तोऽपि वर्णाश्रमधर्मान् याथार्थ्यतो न जानन्ति, जानन्तोऽपि च न तान् यथाव दनुतिष्ठन्ति । महीशूरमण्डलप्रधानसंस्कृतपण्डितश्च ब्रह्मज्ञानकञ्चुकप्रवेशिनां वाह्यावुर्यतृणच्छन्नान्धकूपोपमानां सार्वलौकिकसौभ्रात्रानुदर्शनापदेशेन जातिसङ्करकारकाणां एतेषां वैज्ञानिकहतकानामेव पृष्ठपोषकः संवृत्तः । केवल मेक एव आयुष्मान् महाकुलप्रसूतो वदान्यशेखरः श्रोत्रियवरिष्ठः श्रीदरभङ्गापरयथार्थनामधेय श्रीमद्धनुर्भङ्गदेशमहाराजः, सनातनधर्मे बलात्कार मेन मसहमानः, महामोहान्धतामिस्रके निपतितं भारतवर्ष मिमं, चातुर्वर्ण्य प्रतिष्ठापनेन, सर्वभारतसमयसामरस्यप्रदर्शनेन, ईश्वरभक्ति-गुरुभक्ति-राजभक्तिप्रवर्धकसार्वलौकिकसद्गीतावळिप्रवर्तनेन, श्रीवारणस्यां भारतार्यसर्वस्वभूतविश्वविद्यालयप्रतिष्ठापनेन च, पुन रप्युज्जीवयितुं प्रयतते; न चैतस्य, ऋते परमात्मनः, कोऽपि साहाय्यं विदधाति । इदानीमेव हरद्वारादिषु केषुचित् स्थलेषु सनातनधर्मस्य उद्धानं

विकसितमिव समवलोक्यते। अहह! तदप्येते दुराचारहतकाः, अनुदारा भूदारा इव, उल्लुलूषन्ति। परन्तु न्यक्कारविषया वयमेव, ये नीचाना मेषां उच्छलतां ब्रह्मज्ञानोपदेशापदेशेन सर्वान् त्रैवर्णिकान् चण्डालसदृशान् ब्रह्मबन्धून् क्षत्रबन्धून् वैश्यबन्धूंश्च कुर्वतां चाटुकारा इव किमिदमित्यवगणय्य प्राप्तसङ्केता एव स्वसनातनधर्मसर्वस्वमपि कृत्रिमकोपज्वालाभि र्दिधक्षामः। अथवा किं कुर्मः? पूर्वजचरणा एवाऽस्माकं महामहिममर्यादा मुल्लङ्घिरे। आसी देष महीशूरमण्डलमण्डनायमानपण्डितप्रकाण्डः, अध्यात्मविद्योपदेशकानां प्राग्रेसरः, वैदिकधर्मशास्त्रमर्यादाप्रदर्शकानां प्रथमगणनीयो महाकुलप्रसूतो वैदिकशिखामणित्वेन सर्वैरपि माननीय एव, योऽय मधुना बहूनां पितृपैतामहिकीं पारम्परीणां प्राणाधिकमूल्यां सर्वस्वहानेनापि रक्षणीयां धर्मार्थकाममोक्षचतुर्विधपुरुषार्थनिदानभूतां ब्रह्मण्यतासम्पत्तिं, बलादाच्छिद्य स्वकुतर्कखड्गधारासारैरखिलान् वर्णाश्रमधर्मान्, आत्मानञ्चाऽन्धीकृत्येव, सकलदुराचारमूलाधारभूताया ब्रह्मराक्षस्या दग्धहस्ते समर्पयति स्म। अथवा क स्तस्य दोषः? क्रूरतमोऽयं कलिः! अभद्राणि भाग्यानि! अभव्यं भाग्यम्! ध्वस्ता धीरता! स्रस्ता स्वतन्त्रता! पतनोन्मुखी ब्राह्मणसम्पत्तिः! विभूतप्रायो वर्णाश्रमधर्मः! तत्, महतां विनिन्दनेन व्यर्थोऽयं वदनमलिनीकारः!

हा भारत! किं दुराचारहतकैरेव भोक्ष्यसे? हा वसुन्धरे! किं दीनप्रजानां रक्तैरेव स्नास्यसि? हा सनातनधर्म! किं विलयमेव यास्यसि? हा चातुर्वर्ण्य! किं कथावशेषमेव भविष्यसि?

हा मन्दिरवृन्द! किं धूळिसादेव सम्पत्स्यसे? हा साङ्गवेद! किं भस्मतामेव प्राप्स्यसि? अहह! धिग्! धिग्!! रे कलिकाल!!! य स्त्वं रक्षकानेव भक्षकान् विदधासि! हन्त! भगवन्, महति दुराचारे प्रवृत्ते, धर्मसंस्थापनार्थ मवतरामीति प्रतिज्ञातवानसि! तत् किमितोऽप्यधिकतरं दुराचार मपेक्षसे? अहह! परःकोटयो देवतामूर्तयः प्रमदवनेषु कौतुकागारेषु प्रदर्शनस्थलेषु च क्रीडामूर्तयः कल्प्यन्ते! असंख्यानि देवमन्दिराणि विहारमन्दिराणि क्रियन्ते! अस्तसंख्याः पुण्यभूमय आपानभूमयः सम्पद्यन्ते! राशीकृतानि वेदादिपुस्तकानि कीटदग्धानि प्रमादज्वालाजालै र्ज्वल्यन्ते! कुलीनानामपि कन्यकाः कदर्यहतकैः कुत्सिताभिप्रायेण स्वमताद् बला दाच्छिद्यन्ते! विधवोद्वाहानां, प्रौढाविवाहानां, असवर्णस्त्रीपुरुषपरिणयानां, विजातीयपङ्क्तिभोजनानां, विमतावलम्बनानां, विप्रतिषिद्धविदेशगमनानां, मांसभक्षणानां, मद्यपानानां, धूमपत्रानुसेवनानां, अगम्यागमनानां, अभोज्यभक्षणानां, असेव्यसेवनानां, चूडापुण्ड्रादिविहितकर्मपरित्यागानां, विदेशीयदुराचारादिनिषिद्धकर्मपरिग्रहाणां च क्रीडा इव क्रियन्ते! भगवन्! नाऽधुनाऽपि तव हृदये दया सञ्चरति? प्रभो! किमिति 'दीनबन्धु' पदेन सम्बोध्यसे? यासां भारतीयप्रजानां दीनता मवलोक्य ग्रावाणोऽपि रुदन्ति, तासा मुपरि करुणामयीं दृष्टिमपि न क्षिपसि। हन्त! किय च्छयिष्यसे? अहह! अस्माकं महाक्रन्दनकोलाहलैरपि न विद्राव्यते तव निद्रा? हा! तवाऽपि कथं व्यामोहः? गरळन्तु धूर्जटिना पीतम्, मधु च दानवै रास्वादि; किन्तु, चित्रं यदेष विलक्षण स्त्वयि दृश्यते व्यामोहः! त्वं

हि राजतप्रासादो वा, क्षीरसागरो वा, दन्तिदन्तपर्यङ्को वा, कुण्डलिताऽनन्तभोगाभोगो वा, इति किमपि न वेवेक्षि। अगणितफणावलिफूत्कृतैरिव वीज्यमानः, विमलकमलोदरसोदरसौन्दर्याभ्यां कमलकोमलकमलाकरतलाभ्यां पादयोः पीड्यमानो निःशङ्कं तस्मिन्नेव कोमलतमवेषे शेषे शेषे! तत् किं जगतः शेषस्तव निद्रया भङ्क्ष्यते? अथवा तस्यैव महागरळस्य महामद्यस्य च भगिन्या कनकाङ्गिन्या समालिङ्गित इति, पन्नगकुलमूलस्य शेषनागस्य गरळावलीढै र्निश्वासैः प्रतिरोमकुहरं रञ्जित इति च, कलयसि कां चन मूर्च्छां मत्ततां च? कथ मन्यथा, क्षीरधिवेष्टित एव, क्षीरधिकन्यया रमेथाः!

किन्तु, मैवम्! क्षमस्वैना मनल्पजल्पकल्पनाम्!! 'सर्वत्रैवाऽसि, सर्वान् पश्यसि, सर्वं वेत्सि, सर्वेषु दयसे' इति सन्त्यत्र परःसहस्राणां प्रामाणिकानां वचनानि! येषु विश्वस्य, तव सत्ता अङ्गीक्रियते; कथं तेष्वेव विश्वस्य, तवेदृग्गुणिता नाऽङ्गीकरिष्यते? परं, अहह! पश्यन्नपि, विदन्नपि, न दयसे! हन्त! किं कथ्यते, जगदीश्वरोऽसि! तत् किं गजोद्धारधावनस्थगितोऽसि, य न्न धावसि? विप्ररावणहननवनवासव्रीडितोऽसि, य न्ना ऽवतरसि? कंसच्छेदनायासस्मरणेन वा तूष्णीकोऽसि, य दभयं न ददासि? चिरन्तन इति वलीपलितविग्रहो वा सम्पन्नोऽसि, य न्नाऽऽविर्भवसि? न ज्ञायते तत्त्वम्! यादृश स्त्वं, तादृशमेव वयं नमस्कुर्मः। प्रभो, प्रणतार्तिहर, दयस्व! दयस्व!! वरदराज, वन्दारुजनमन्दार, क्षमस्वाऽस्मान्! क्षमस्व!! हा गदाधर! कदा तव कौमोदकी मोदं जनयिष्यति?

अहो शार्ङ्गपाणे! कदा तव चाप स्तापं विलयं यापयिष्यति? हहा सुदर्शनोज्ज्वल! कदा तव चक्रं दुष्टचक्रं चङ्क्रमिष्यते? आहो नन्दननन्दन! कदा वा तव नन्दकः साधुबृन्दान् नन्दयिष्यति? मा स्म, भगवन्, अस्मदपराधान् स्मार्षीः! पाहि! पाहि!! परमात्मन् पाहि!!!

( श्रीदशावतारदण्डकम् )

---

जय! जय!! जगतीपते! श्रीपते !!
विश्वसृष्टिस्थितिध्वंसकारिन्! जग-
द्धर्मसंस्थापनार्थप्रकाशावता-
रक्रमस्फारमाहात्म्यतादात्म्यभा-
रिन्!! सदाऽलङ्कृतोद्दामवैकुण्ठसिं-
हासनारोहकारिन्! प्रपन्नार्तिहा-
रिन्!! अहो! बाधिताऽशेषभूतौघघो-
रासुराऽऽस्कन्दिताऽऽम्नायजातोद्धृति-
प्रस्तुतोद्वृत्तसंवर्तसप्तार्णवी-
प्लावनाऽऽर्तार्तवैवस्वताऽऽक्रान्तदु-
र्दान्तनौवाहनाख्यप्रसङ्गद्वया-
रूढमायामहामीनमूर्ते! मह-
र्षिप्रतानस्तुताऽस्तोककीर्ते !! सुधा
दानसंरम्भदेवासुरस्तोमब-
न्धोज्वलस्कन्धसंव्यूढसर्पेशयो-
क्तभ्रमोद्भ्रान्तनीरौघनिर्मग्नम-
न्थक्ष्माभृत्समुत्तम्भनारम्भग-

म्भीरपृष्ठप्रतिष्ठप्रसाधिष्ठकू-
र्माकृते ! सम्प्रतिष्ठापिताशेषसा-
धिष्ठकर्माहृते !! दृप्तदैतेयजा-
तीयरक्षाविधादक्षरूक्षाक्षिरो-
चिर्हिरण्याक्षशिक्षाक्षणोत्क्षिप्ततीक्ष्णैकदंष्ट्राशिखोत्तभ्यमानाऽक्षत-
क्षोणिचक्रावतंसक्रियोदारभू-
दारचूडामणे ! भक्तचिन्तामणे !!

प्रकटितनिरवद्यहृद्यस्वनि-
देशविद्वत्सुरर्षिप्रदत्तोपदे-
शप्रसीदन्मनोन्यस्तदुस्तर्कदू-
रत्रिधामाख्यधामस्तुतिस्तोमस-
क्तस्वभक्तप्ररक्षाविधौ दुर्ग्रहो-
ग्राऽसुराध्यक्षवक्षःक्षणक्षोभणो-
ग्रक्षरत्क्षातजक्षोदशोणीकृता-
भीक्ष्णतीक्ष्णस्फुरत्पाणिजस्तोमभी-
मोज्वलन्नारसिंहाकृते ! सर्वसौ-
पर्वणव्रातदत्तात्मसाक्षात्कृते !!
देववैर्यङ्गनावर्गसीमन्तसि-
न्दूरसन्ध्यामयूखच्छटोन्मार्जनो-
द्दामधामोज्वलद्विक्रमैकत्रया-
क्रान्तविध्यण्डभाण्डोदरोद्दण्डप-

द्दण्डकाण्डप्रचण्डप्रभावाभिभू-
तप्रभूतावलिप्तप्रतीपप्रता-
पप्रकाशात्मतादात्म्यविघ्नोल्लस-
च्छाम्बरीवामनाकारशालिन्! पदो-
द्भिन्नविध्यण्डभित्तिद्रवद्वाह्यपू-
राभिपातप्रवाहाभिषेकक्षणा-
सक्तसच्छीकरासारमालिन्!! अनौ-
पम्यमाहात्म्यसीमन्! त्रिधामन्!! अनि-
र्देश्यदोर्वीर्यभारिन्! सदा धर्मचा-
रिन्!! विनिर्मुद्रलीलोदयद्योगनि-
द्राख्यमुद्राविधे! विश्वतेजोनिधे!!

त्रिभुवनरिपुमत्तचित्तातिमा-
त्रात्तमानोन्नताऽजय्यदुर्वारग-
र्वावहोद्रिक्तचारित्रवैचित्र्यदु-
र्वृत्तमत्ताऽशुभक्षत्रसर्वस्वस-
र्वङ्कषोद्दण्डहिण्डत्कठोराग्रधा-
राकुठाराननोद्वान्तदुर्दान्तर-
क्तच्छटानीरधाराप्रदत्ताम्बुक-
प्राप्यनव्यापनैवापदानापदा-
नप्रतापप्रथाप्रोल्लसत्क्षत्रिय-
श्रोत्रियीभूतविख्यातलीलामुने!
सर्ववेदार्थसद्रत्नपालीखने!

मेघनादोरगास्त्रप्रपातक्षणा-
यातवाहाण्डजच्छायनिर्मोचिता-
त्कलाऽशेषशेषाशरध्वंसधी-
रर्क्षगोपुच्छतुच्छीकृताशेषर-
क्षस्तते ! भूतजाताऽभिविलासका-
योधनाचण्डिमोदस्तरक्षःपते !!
दैत्यकण्ठाऽस्थिकूटस्फुटोन्मार्जनो-
द्दामहालस्फुरज्ज्योतिरुल्लासितो-
द्दामदोर्दण्डसङ्कर्षणाऽऽयातका-
लिन्द्यभिश्लेषसंक्रान्तपीनस्तना-
भोगपत्रावलीलाञ्छितोरस्थल-
स्थूलमुक्ताफलोदारहारप्रभा-
मण्डलप्रस्फुरत्कण्ठ ! वैकुण्ठ !! लो-
कैकशिक्षागुरो ! सद्गुरोऽस्मद्गुरो !!

जय ! जय !! जय !!! देवदेवेशचू-
डामणिश्रेणिनीराजितोपान्तपा-
दद्वयाम्भोज ! गोवर्धनच्छत्रनि-
र्वारिताऽऽखण्डलोद्योजिताऽऽकाण्डच-
ण्डाम्बुवाहातिवर्षत्रसद्गोकुल-
त्राणविस्मापिताशेषविश्व ! प्रसृ-
ष्टाद्यविश्व !! स्फुरदद्वैतविश्रान्तिस-
न्तानसन्तप्तमन्दाक्षसंसारनि-

द्रापहारिन्! प्रबुद्धावतारिन्!! दुरा-
चारभूयिष्ठगर्वावलेपिन्! समा-
विष्कृताशेषभूतानुकम्पिन्!! महन्!!!
देशकालाद्यवच्छेदशून्य! स्वयं-
भासमानासमानप्रकाशोर्णना-
भप्रतीकाश मेत ज्जगज्जात मा-
त्मान्तरा दात्मनै वान्तरा व्यञ्जयन्
रञ्जयन् भञ्जय न्नञ्जसा सच्चिदा-
नन्दरूपाऽनुरूपात्ममायासमा-
यातमूर्ते! त्रिमूर्ते!! प्रसादेन ते
सन्तु सर्वे नृपा न्यायमार्गानुगाः,
प्राप्तपद्याः सदाचारयुक्ताः प्रजाः,
एहि तूर्णं मुदा! देहि मुक्तिं सदा!!
पाहि! वर्णाश्रमाचारधर्मान् विभो!
पाहि!! तद्धर्मसंरक्षणोद्योगिनः
पाहि!!! चास्मान् प्रभो!! देव तुभ्यं नमः!
देव तुभ्यं नमः!! देव तुभ्यं नमः!!!





# श्रीवेदान्तगुरुपञ्चकम्

सच्चिन्मात्रं ब्रह्म यथार्थं, सर्वं चाऽन्य न्मिथ्यैव,
ब्रह्मात्मैक्यं मुक्तिः, सा च ब्रह्मज्ञानेनैवाप्या ।
अद्वैतं वै यस्य मतं स्यात्, आद्यं तं श्रीलोकगुरुं
श्रीमच्छङ्करभगवत्पादं श्रितचिन्तामणि माश्रय भो ॥ १

सत्यज्ञानसुखादिविशिष्टः सर्वान्तर्या म्यखिलेड्यः,
जीवोऽस्यांशः, प्रकृति र्देहः, शिवसायुज्यं मुक्तिः स्यात्
श्रीमच्छैवविशिष्टाद्वैतं श्रेष्ठं यस्य मतं स्यात्, तं
श्रीकण्ठाख्यं लोकाचार्यं श्रितचिन्तामणि माश्रय भो ॥ २

सत्यज्ञानाद्यखिलगुणाढ्यः सर्वात्मा हरि रेवैकः,
तस्य शरीरं चिदचिद्रूपं, तत्सारूप्यं मुक्तिः स्यात् ।
श्रीमद्विष्णुविशिष्टाद्वैतं श्रेष्ठं यस्य मतं प्रोक्तं,
श्रीरामानुजलोकगुरुं तं श्रितचिन्तामणि माश्रय भो ॥ ३

सृष्टिस्थितिसंहारविनोदः शिव एवैकः पतिरीड्यः,
पशुपाशौ तत्सृष्टौ नित्यौ, पशुपतिसामीप्यं मुक्तिः ।
शैवद्वैतं यस्य मतं स्यात्, श्रीलं श्रीपतिलोकगुरुं
श्रीकरभाष्याचार्यवरं तं श्रितचिन्तामणि माश्रय भो ॥ ४

सर्वनियन्ता विष्णुः परमः, सत्यं जगदपि जीवाश्च,
नारायणसालोक्यं मुक्तिः, नवविधभक्त्या सा प्राप्या ।
विष्णुद्वैतं यस्य मतं स्याद्वेदपुराणाद्यधिगम्यं,
श्रीमध्वाख्यं [illegible] तं श्रितचिन्तामणि माश्रय भो ॥ ५